# ॥ शिवप्रार्थना ॥

ॐनमोंकार स्वरूपाय वेदरूपाय ते नमः ।
अलिंग लिंगरूपाय विश्वरूपाय ते नमः ॥१ ॥
नमो मोक्षप्रदेतुभ्यं नमो नादात्मने तथा ।
नमः शब्दस्वरूपाय रूपातीताय ते नमः ॥२ ॥
त्वं माता सर्वलोकानां त्वमेव जगतः पिता ।
त्वं भ्राता त्वं सुहृन्मित्रः त्वं प्रियः प्रियरूपधृक् ॥३ ॥
त्वं गुरुस्त्वं गतिः साक्षात्वं पिता त्वं पितामहः ।
नमस्ते भगवनुरुद्रभास्करामित-तेजसे ॥४ ॥
संसारसागरे मग्नं मामुद्धर शिवाव्यय ।
अनेन पूजनेन त्वं वाञ्छितार्थप्रदो भव ॥ ५ ॥
अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वर ।
पूजितं यन्मया देव ! तत्क्षमस्वाम्बिकापते ॥६ ॥
अन्यथासक्तचित्तेन क्रियाहीनेन वा विभो ।
भक्तिश्रद्धाविहीनेन मन्त्रतन्त्र विना प्रभो ॥७ ॥
मनोवाक्कायदुष्टेन पूजितं परमेश्वर ।
तत्सर्वं क्षम्यतां देव ! दासे कृत्वा दयां मयि ॥८ ॥
ज्ञानप्रदाय किल कल्मषनाशनाय ।
भक्तप्रियाय शशिशोभितशेखराय
गङ्गाधराय गिरिजापतये नमोद्य ।
भक्तिर्दृढा भवतु मे त्वयि भो महेश ॥९ ॥
हे चन्द्रचूड जगदीश्वर मन्मथारे
गौरीपते शिव शरण्य पिनाकपाणे ।
ज्योतिःस्वरूप वृषभध्वज पञ्चवक्त्र
नस्त्वामृते जगति कः सुखदोऽस्ति स्वामिन् ॥१० ॥
प्रणतमनुज-कष्टघ्नाय गंगाधराय
त्रिभुवन-जनकाय त्र्यम्बकायाक्षराय ।
मनसिज दहनायाभीष्टदात्रे शिवाय
त्वयि भवतु दृढा मे ते नमोस्त्वीश भक्तिः ॥११ ॥

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव ॥१२ ॥
शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवे भवे ।
अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥१३ ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वर ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥१४ ॥
रूपं देहि जयं देहि भगं भगवन् देहि मे ।
भुक्तिमुक्तिफलं देहि गृहाणार्चा त्वयाधुना ॥१५ ॥
अज्ञानाद्यदि वा ज्ञानाज्जप-पूजादिकं मया ।
कृतं तदस्तु सफलं कृपया तव शंकर ॥१६ ॥
तावकस्त्वद्गतप्राणास्त्वचित्तोऽहं सदा मृड ।
पुष्पाञ्जलिं समर्प्यैव क्षमाप्य विधिपूर्वकम् ॥१७ ॥
पूजा काले पुनर्देव त्वयागन्तव्यमेव हि ।
मृत्युञ्जयस्य(पार्थिवस्य च)लिङ्गस्य यन्मयापूजनं कृतम् ।
तेन मे भगवान्रुद्रो वाञ्छितार्थं प्रयच्छतु ॥१८ ॥

**॥ इति पुनः पुनः प्रणम्य ॐश्रीसाम्बसदाशिवार्पणमस्तु ॥**

भूमौ स्खलितपादानां भूमिरेवावलम्बनं ।
त्वयि जातापराधानां त्वमेव शरणं शिव ॥
अपराधो भवत्येव सेवकस्य पदे पदे ।
कोऽपरः सहतां लोके केवलं स्वामिनं विना ॥
क्षमस्व देव देवेश क्षमस्व जगदीश्वर ।
तव चरणाम्बुजे नित्यं निश्चला भक्तिरस्तु मे ॥

**॥ इति क्षमाप्य लिङ्गमुद्रया प्रणमेत् ॥**

अक्षरसंयोजकः सम्पादकश्च-डॉ.श्रीओम शर्मा (व्याकरणविभागे सहायकाचार्यः Asst.prof.)
राष्टियसंस्कृतसंस्थानम्,श्रीरघुनाथकीर्त्तिपरिसरः देवप्रयागः(उत्तराखण्डः)